# श्री राघवेन्द्र मङ्गलाष्टकम्

श्रीमद्रामपादारविन्दमधुपः श्रीमध्ववंशाधिपः
सच्चिष्योडुगणोडुपः श्रितजगद्गीर्वाणसत्पादपः ।
अत्यर्थं मनसा कृताच्युतजपः पापान्धकारातपः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ १॥

कर्मन्दीन्द्रसुधीन्द्रसद्गुरुकराम्भोजोद्भवः सन्ततं
प्राज्यध्यानवशीकृताखिलजगद्वास्तव्यलक्ष्मीधवः ।
सच्छास्त्रादि विदूषकाखिलमृषावादीभकण्ठीरवः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ २॥

सालङ्कारककाव्यनाटककलाकाणादपातञ्जल-
त्रय्यर्थस्मृतिजैमिनीयकवितासङ्कीतपारङ्गतः ।
विप्रक्षत्रविडङ्घ्रिजातमुखरानेकप्रजासेवितः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ३॥

रङ्गोत्तुङ्गतरङ्गमङ्गलकर श्रीतुङ्गभद्रातट-
प्रत्यक्स्थद्विजपुङ्गवालय लसन्मन्त्रालयाख्ये पुरे ।
नव्येन्द्रोपलनीलभव्यकरसद्वृन्दावनान्तर्गतः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ४॥

विद्वद्राजशिरःकिरीटखचितानर्घ्योरुरत्नप्रभा
रागाघौघहपादुकाद्वयचरः पद्माक्षमालाधरः ।
भास्वद्दण्टकमण्डलूज्ज्वलकरो रक्ताम्बराडम्बरः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ५॥

यद्वृन्दावनसत्प्रदक्षिणनमस्काराभिषेकस्तुति-
ध्यानाराधनमृद्विलेपनमुखानेकोपचारान् सदा ।
कारं कारमभिप्रयान्ति चतुरो लोकाः पुमर्थान् सदा
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ६॥

वेदव्यासमुनीशमध्वयतिराट् टीकार्यवाक्यामृतं
ज्ञात्वाऽद्वैतमतं हलाहलसमं त्यक्त्वा समाख्याप्तये ।
सङ्ख्यावत्सुखदां दशोपनिषदां व्याख्यां समाख्यन्मुदा
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ७॥

श्रीमद्वैष्णवलोकजालकगुरुः श्रीमत्परिव्राड्गुरुः
शास्त्रे देवगुरुः श्रितामरतरुः प्रत्यूहगोत्रस्वरुः ।

चेतोऽतीतशिरुस्तथा जितवरुस्सत्सौख्यसम्पत्करुः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ८॥

यस्सन्ध्यास्वनिशं गुरोर्यतिपतेः सन्मङ्गलस्याष्टकं
सद्यः पापहरं स्वसेवि विदुषां भक्त्यैतदाभाषितम् ।
भक्त्या वक्ति सुसम्पदं शुभपदं दीर्घायुरारोग्यकं
कीर्तिं पुत्रकलत्रबान्धवसुहृन्मूर्तिः प्रयाति ध्रुवम् ॥

इति श्रीमदप्पणाचार्यकृतं राघवेन्द्रमङ्गलाष्टकं सम्पूर्णम् ।